॥ याज्ञवल्क्योपनिषत् ॥

संन्यासज्ञानसम्पन्ना यान्ति यद्वैष्णवं पदम् ।
तद्वै पदं ब्रह्मतत्त्वं रामचन्द्रपदं भजे ॥

ॐ पूर्णमदः पूर्णमिदं पूर्णात्पूर्णमुदच्यते ।
पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यते ॥

ॐ शान्तिः शान्तिः शान्तिः ॥

हरिः ॐ ॥ अथ जनको ह वैदेहो याज्ञवल्क्यमुपसमेत्योवाच भगवन्संन्यासमनुब्रूहीति कथं संन्यासलक्षणम् । स होवाच याज्ञवल्क्यो ब्रह्मचर्यं समाप्य गृही भवेत् । गृहाद्वनी भूत्वा प्रव्रजेत् । यदि वेतरथा ब्रह्मचर्यादेव प्रव्रजेद्गृहाद्वा वनाद्वा । अथ पुनर्व्रती वाव्रती वा स्नातको वाऽस्नातको वा उत्सन्नाग्निरनग्नोकोऽवा यदहरेव विरजेत्तदहरेव प्रव्रजेत् । तदेके प्राजापत्यामेवेष्टिं कुर्वन्ति । अथ वा न कुर्यादाग्नेय्यामेव कुर्यात् । अग्निर्हि प्राणः । प्राणमेवैतया करोति । त्रैधातवीयामेव कुर्यात् । एतयैव त्रयो धातवो यदुत सत्त्वं रजस्तम इति अयं ते योनिरृत्विजो यतो जातो अरोचथाः । तं जानन्नग्न आरोहाथानो वर्धया रयिमित्यनेन मन्त्रेणाग्निमाजिघ्रेत् । एष वा अग्नेर्योनिर्यः प्राणं गच्छ स्वां योनिं गच्छ स्वाहेत्येवमेवैत-दाग्रामादग्निमाहृत्य पूर्ववदग्निमाजिघ्रेत् यदग्निं न विन्देदप्सु जुहुयादापो वै सर्वा देवताः सर्वाभ्यो देवताभ्यो जुहोमि स्वाहेति साज्यं हविरनामयम् । मोक्षमन्त्रस्त्रय्येवं वेद तद्ब्रह्म तदुपासितव्यम् । शिखां यज्ञोपवीतं छित्त्वा संन्यस्तं मयेति त्रिवारमुच्चरेत् । एवमेवैतद्भगवन्निति वै याज्ञवल्क्यः ॥ १॥

अथ हैनमत्रिः पप्रच्छ याज्ञवल्क्यं यज्ञोपवीती कथं ब्राह्मण इति । स होवाच याज्ञवल्क्य इदं प्रणवमेवास्य तद्यज्ञोपवीतं य आत्मा । प्राश्याचम्यायं विधिरथ वा परिव्राड्विवर्णवासा मुण्डोऽपरिग्रहः शुचिरद्रोही भैक्षमाणो ब्रह्म भूयाय भवति । एष पन्थाः परिव्राजकानां वीराध्वनि वाऽनाशके वापां प्रवेशे वाग्निप्रवेशे वा महाप्रस्थाने वा । एष पन्था ब्रह्मणा हानुवित्तस्तेनेति स संन्यासी ब्रह्मविदिति । एवमेवैष भगवन्निति वै याज्ञवल्क्य । तत्र परमहंसा नाम संवर्तकारुणि-श्वेतकेतुदूर्वासऋभुनिदाघदत्तात्रेयशुकवामदेव-

हारीतकप्रभृतयोऽव्यक्तलिङ्गाऽव्यक्ताचारा अनुन्मत्ता
उन्मत्तवदाचरन्तः परस्त्रीपुरपराङ्मुखास्त्रिदण्डं
कमण्डलुं भुक्तपात्रं जलपवित्रं शिखां यज्ञोपवीतं
बहिरन्तश्चेत्येतत्सर्वं भूः स्वाहेत्यप्सु परित्यज्यात्मान-
मन्विच्छेत् । यथा जातरूपधरा निर्द्वन्द्वा निष्परिग्रहा-
स्तत्त्वब्रह्ममार्गे सम्यक्सम्पन्नाः शुद्धमानसाः
प्राणसन्धारणार्थं यथोक्तकाले विमुक्तो भैक्षमाचर-
न्नुदरपात्रेण लाभालाभौ समौ भूत्वा करपात्रेण वा
कमण्डलूदकपो भैक्षमाचरन्नुदरमात्रसंग्रहः
पात्रान्तरशून्यो जलस्थलकमण्डलुरबाधकरहःस्थल-
निकेतनो लाभालाभौ समौ भूत्वा शून्यागारदेवगृह-
तृणकूटवल्मीकवृक्षमूलकुलालशालाग्निहोत्रशालानदी-
पुलुनगिरिकुहरकोटरकन्दरनिर्झरस्थण्डिलेष्वनिकेतनिवास्य-
प्रयत्नःशुभाशुभकर्मनिर्मूलनपरः संन्यासेन
देहत्यागं करोति स परमहंसो नामेति । आशाम्बरो न
नमस्कारो न दारपुत्राभिलाषी लक्ष्यालक्ष्यनिर्वर्तकः
परिव्राट् परमेश्वरो भवति । अत्रैते श्लोका भवन्ति ।
यो भवेत्पूर्वसंन्यासी तुल्यो वै धर्मतो यदि ।
तस्मै प्रणामः कर्तव्यो नेतराय कदाचन ॥ १॥

प्रमादिनो बहिश्चित्ताः पिशुनाः कलहोत्सुकाः ।
संन्यासिनोऽपि दृश्यन्ते देवसंदूषिताशयाः ॥ २॥

नामादिभ्यः परे भूम्नि स्वाराज्ये चेत्स्थितोऽद्वये ।
प्रणमेत्कं तदात्मज्ञो न कार्यं कर्मणा तदा ॥ ३॥

ईश्वरो जीवकलया प्रविष्टो भगवानिति ।
प्रणमेद्दण्डवद्भूमावाश्वचण्डालगोखरम् ॥ ४॥

मांसपाञ्चालिकायास्तु यन्त्रलोकेऽङ्गपञ्जरे ।
स्नाय्वस्थिग्रन्थिशालिन्यः स्त्रियः किमिव शोभनम् ॥ ५॥

त्वङ्मांसरक्तबाष्पाम्बु पृथक्कृत्वा विलोचने ।
समालोकय रम्यं चेत्किं मुधा परिमुह्यसि ॥ ६॥

मेरुशृङ्गतटोल्लासि गङ्गाजलस्योपमा ।
दृष्टा यस्मिन्मुने मुक्ताहारस्योल्लसशालिता ॥ ७॥

श्मनानेषु दिगन्तेषु स एव ललनास्तनः ।
श्वभिरास्वाद्यते काले लघुपिण्ड इवान्धसः ॥ ८॥

केशकज्जलधारिण्यो दुःस्पर्शा लोचनप्रियाः ।
दुष्कृताग्निशिखा नार्यो दहन्ति तृणवन्नरम् ॥ ९॥

ज्वलना अतिदूरेऽपि सरसा अपि नीरसाः ।
स्त्रियो हि नरकाग्नीनामिन्धनं चारु दारुणम् ॥ १०॥

कामनाम्ना किरातेन विकीर्णा मुग्धचेतसः ।
नार्यो नरविहङ्गानामङ्गबन्धनवागुराः ॥ ११॥

जन्मपल्वलमत्स्यानां चित्तकर्दमचारिणाम् ।
पुंसां दुर्वासनारज्जुर्नारीबडिशपिण्डिका ॥ १२॥

सर्वेषां दोषरत्नानां सुसमुद्गिकयानया ।
दुःखशृङ्खलया नित्यमलमस्तु मम स्त्रिया ॥ १३॥

यस्य स्त्री तस्य भोगेच्छा निस्त्रीकस्य क्व भोगभूः ।
स्त्रियं त्यक्त्वा जगत्यक्तं जगत्यक्त्वा सुखी भवेत् ॥ १४॥

अलभ्यमानस्तनयः पितरौ क्लेशयेच्चिरम् ।
लब्धो हि गर्भपातेन प्रसवेन च बाधते ॥ १५॥

जातस्य ग्रहरोगादि कुमारस्य च धूर्तता ।
उपनीतेऽप्यविद्यत्वमनुद्वाहश्च पण्डिते ॥ १६॥

यूनश्च परदारादि दारिद्र्यं च कुटुम्बिनः ।
पुत्रदुःखस्य नास्त्यन्तो धनी चेन्म्रियते तदा ॥ १७॥

न पाणिपादचपलो न नेत्रचपलो यतिः ।
न च वाक्चपलश्चैव ब्रह्मभूतो जितेन्द्रियः ॥ १८॥

रिपौ बद्धे स्वदेहे च समैकात्म्यं प्रपश्यतः ।
विवेकिनः कुतः कोपः स्वदेहावयवेष्विव ॥ १९॥

अपकारिणि कोपश्चेत्कोपे कोपः कथं न ते ।
धर्मार्थकाममोक्षाणां प्रसह्य परिपन्थिनि ॥ २०॥

नमोऽस्तु मम कोपाय स्वाश्रयज्वालिने भृशम् ।
कोपस्य मम वैराग्यदायिने दोषबोधिने ॥ २१॥

यत्र सुप्ता जना नित्यं प्रबुद्धस्तत्र संयमी ।
प्रबुद्धा यत्र ते विद्वान्सुषुप्तिं याति योगिराट् ॥ २२॥

चिदिहास्तीति चिन्मात्रमिदं चिन्मयमेव च ।
चित्त्वं चिदहमेते च लोकाश्चिदिति भावय ॥ २३॥

यतीनां तदुपादेयं पारहंस्यं परं पदम् ।
नातः परतरं किञ्चिद्विद्यते मुनिपुङ्गवः ॥ २४॥

इत्युपनिषत् ॥

ॐ पूर्णमदः पूर्णमिदं पूर्णात्पूर्णमुदच्यते ।
पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यते ॥

ॐ शान्तिः शान्तिः शान्तिः ॥ हरिः ॐ तत्सत् ॥

इति याज्ञवल्क्योपनिषत्समाप्ता ॥